नायकः - मुम्बापुरी द्वित्रवारं दृष्टा मया । तत्र न उषितम् ?

कुमारी - भवतु, कदापि पुस्तकापणे उद्योगार्थी आसीद्वा ?

नायकः - न नैव ?

कुमारी - (लज्जिता) अहमेवं पृच्छन्ती अस्मीति व्याकुलो वा ? तत्र कारणं तु--

नायकः - न हि, न हि । किमर्थं व्याकुलता ? भद्रे स्वैरं पृच्छ । तव संदेह परिहार एव उद्दिष्टांशः ननु ?

कुमारी - अस्तु तर्हि । किमधीतवान् भवान् ?

नायकः - अधिकं किमपि न । अक्षरज्ञानमस्ति । तावदेव ।

कुमारी - भवन्तं दृष्ट्वा चिन्तयामि यत् भवतः अभिनये परिचयः अस्तीति । कदापि नाटकेषु अभिनीतवान् ?

नायकः - (विषण्णः सन्, स्मितं कृत्वा) हाँ, इदानीम् अभिनयं कुर्वन्नस्मि ।

कुमारी - (नावगच्छन्ती) इदानीं कुर्वन्नस्ति ?

नायकः - हुम्, इदमेव । जीवननाटके बन्दीजनस्य पात्रम् ।

कुमारी - (दुःखिता सती) आर्य क्षम्यताम् । अत्येतु नाम तत् । किमपि पद्यं भवान् गायति किल ?

नायकः - आम् । शृणोतु-
कोन्वस्मिन्सांप्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यसन्धो दृढव्रतः ॥
एतावदेव, अग्रे न जानामि ।

कुमारी - अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते ।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥
(उक्त्वा, नायकस्य मुखमेव निध्यायन्ती) अमुं श्लोकं जानाति वा ?

नायकः - (श्लोकभावे निमग्नः, जागरित्वा) आम् । न न, न जानामि ।

कुमारी - (मुग्धया वाण्या) अयं श्लोकः मम भ्रात्रा श्यामेन पाठितः । सम्यगस्ति किल ?

नायक. पश्य इयमेव सा, त्वां द्रष्टुं बहुदूरादागता ।

नायकः - (उदासीन इव) अस्ति ।



कुमारी - कथमेवं वदति ? अस्य पद्यस्य भावः परमरमणीयः किल ?

नायकः - रमणीयः इति केनोक्तम् ?

कुमारी - मम भ्रात्रा श्यामेन । सः अध्ययन शीलः आसीत् । ग्रन्थेभ्यः ईदृशसुन्दरोक्तीनां संग्रह एव तन्निकटे आसीत् । कदाचित् तत्सर्वं मां पाठयतिस्म ।

नायकः - स्यात् । एकैकस्य एकैकः उन्मादः ।

कुमारी - (क्षणं मौनमास्थाय, अधोनिविष्टदृष्टिः)
एहि एहि चन्दिर तापहरण मन्दिर ।
विमलकान्ति सुन्दर शीतकिरणसागर ।
(नायकं पश्यति)

नायकः - बाल्ये उक्तं गीतं वा ? इतोऽप्यस्ति ?

कुमारी - अस्ति ।

नायकः - वद तर्हि ।

कुमारी - भवानेव वदतु ।

नायकः - (विहस्य) कथमहं जानामि ?

कुमारी - (नायकम् आपादमस्तकं पश्यन्ती सा कम्पम्) हुम्, भवान्, भवान्---

नायकः - वद भद्रे

कुमारी - यथा भवान् उक्तवान् तथा केवलं रूपसा तावदेव । भवान् मम भ्राता श्यामः इत्येव भाति ।

नायकः - (दीर्घं निश्वस्य) महान् मे सन्तोषः ।

कुमारी - सन्तोषः ? किमर्थम् ?

नायकः - अथकिम् ? इदानीं तव संशयः अप किल ? इतो गत्वा यदि त्वं 'सः श्या न' इति निश्चयेन मातरं वदसि तदा तस हृदयात् शोकशल्यमपि अपनीतं भवेत् ।

कुमारी - सत्यं सत्यम् ।

नायकः - अत एवोक्तं सन्तोष इति । मम, त तवाम्बायाश्च प्रमोदस्थानमिदम् ।

कुमारी - तथापि अम्बा श्यामं पुनः कदा पश्येयमि चिन्तायां सर्वदा मग्नैव तिष्ठति ।

नायकः - कदाचिदागच्छेत् । यदि प्राणैरवियुक्तः यदा कदापि आगच्छेदेव । अम्बां भगिनीं च विना कति दिनानि अन्यत्र तिष्ठति ?

कुमारी - आर्य, अवितथं भवतु भवद्वचः इति आशासे (दीर्घं निश्वस्य) अस्माकं भीतिः सकारणा वा न वेति ज्ञातुं मया एतावद्दूरमागन्तव्यम् आपतितम् । आगतं च । प्रायो मया ।वनाकारणं भवान् क्लेशितः ।

नायकः - न न । त्वया अत्रागत्य शोभनं कृतं भद्रे ।

कुमारी - (विषादं रूपयित्वा) आर्य अन्यच्च, मया किमपि किमपि असम्बद्धं पृष्टम् । तत्सर्वं मनसि न करोतु आर्यः ।

नायकः - प्रष्टव्यमेव पृष्टवती त्वम् । को दोषः ?

कुमारी - अंस्तु । अवसितं मे कार्यम् । आपृच्छे तावदहम् । (नमस्कृत्य) वन्दनानि ।

नायकः - (तस्याः निर्गमनमनिच्छन्) हन्त, गच्छसि वा ?

कुमारी - सत्यम् । "यद्येषः तव भ्राता भवेत् यथावकाशं संलापं कुरु, अन्यथा शीघ्रं समापनं वर मित्युक्त"मासीत् तैः । अतः....

नायकः - अस्तु । ग्रामं प्रति गच्छसि ?

कुमारी - आम् । अहं त्वरे । केवलं शरीरेण अत्रास्मि ।

नायकः - एवं तवागमनमत्र व्यर्थमेव नासीत् किल ?

कुमारी - न हि न हि ।

नायकः - एतावत्पर्यन्तं संभाषितम् । परं तव नाम किमित्येव न मया ज्ञातम् ।

कुमारी - श्यामलाकुमारीति मन्नाम ।

नायकः - (किमपि स्मरन्निव) किं किं शयामला, श्यामला....

कुमारी - (विस्मिता) किमर्थम् ? किं जातम् ?

नायकः - न किञ्चित् । तव नामश्रवणेन किमपि मम स्मृति- पथमायाति । (शिरः अङ्गुल्या कुट्टयन् स्मरणमभिनयति)

कुमारी - किं स्मरति आर्यः ?

नायकः - ईदृशमेव नाम अन्यत्र श्रुतवानस्मि । अस्तु, तव ग्रामः कः ?

कुमारी - चिन्नूर्-इति, दुर्गसमीपे कश्चन ग्रामः ।

नायकः - श्यामलाकुमारी चिन्नूर् हाँ--हाँ

कुमारी - किमेतत् । आर्य किं स्मृतम् ?

नायकः - मुहूर्तमेकं तिष्ठ...तस्य...तस्य नाम चिन्नूर्... कुमार्... न अत्र अस्ति परमत्र नावरोहति । हा... श्यामकुमार् चिन्नूर् ! तदेव नाम ।

कुमारी - (विस्मयकुतूहलोत्फुल्लनेत्रा) आम्, तदेव मम भ्रातुः पूर्णं नामधेयम् ।

नायकः - एवम् ?

कुमारी - आम् सत्यम् ? तं भवान् कथं जानाति ? कदा दृष्टः ? कुत्र दृष्टः ?

नायकः - सः महान् वृत्तान्तः । वदामि । उपविश भद्रे, उपविश ।

कुमारी - (सहर्षं) हन्त, सहोदरस्य वृत्तान्तम् इदानीं शृणोमि मन्दभाग्या । वदतु आर्य, शीघ्रं वदतु ।

नायकः - भद्रे, आमूलचूलं वदामि । सर्वं सावधानं श्रुत्वा इतो गत्वा अम्बायै वक्तव्यं सर्वम् ।

कुमारी - अवश्यम् आर्य, अवश्यं वदामि ।

नायकः - शृणु । स्यात् त्वमपि किञ्चित् जानीषे । अष्टवर्षेभ्यः पूर्वं महत् युद्धं संभूतं जर्मनि-ब्रिटन् देशयोर्मध्ये ।

कुमारी - आम् ।

नायकः - तदा आंग्लानां साहायार्थमस्माकं देशेऽपि सेनां सज्जीकर्तुम् उद्युक्ताः । तदा अहमपि सेनां प्रविष्टवान् ।

कुमारी - ततस्ततः ।

नायकः - तदनन्तरं मासत्रयं यावत् अत्र अस्माकं कृते प्रशिक्षणं दत्तम् । पश्चात् मुम्बापुरीतः नौकायानेन वयं यूरोप्देशं नीताः । तत्र फ्रान्स् देशे चत्वारि वर्षाणि यावत् घोरयुद्धम् आसीत् ।

कुमारी - चत्वारिवर्षाणि अपि भवान् तत्रैवासीत् किम् ?

नायकः - आम्, तत्रैवासम् । अहं Belgaum Light Artillery Second Battallion मध्ये

Scargent आसम् । अस्माभिः सह मैसूरु राज्यस्य दलमेकमासीत् । वयं सर्वे भूमौ गर्तं कृत्वा तत्र स्थित्वा युद्धे निरताः आस्म । तदा कदाचित् उषःकाले शत्रूणामुपरि गोलकवृष्टिरेव वर्षणीया इति कृत्वा कार्ये प्रवृत्ताः ।

कुमारी - ततस्ततः ।

नायकः - तदा, अस्माकं सेनाधिकारी रुद्रः इति आसीत् । सः अग्रे गतवान्, शत्रुगोलकेन ऊरुप्रदेशे आहतः तत्रैवं पतितवान् । गन्तुमशक्तः शनैः शनैः रांसर्पन् तत्रैव स्थिते अन्यस्मिन् गर्ते पतितः । शत्रवः विभिन्न- शस्त्रैः गोलकप्रवाहमेव उद्धमयन्ति स्म । पतितस्य अस्मदीय सेनानायकस्य परितः शस्त्रप्रहारः अत्यधिक आसीत् । तदा किमभवत् जानासि ?

कुमारी - (सावेगं) किमभवत् ?

नायकः - तदा सहसा मैसूरुराज्यदलस्य कश्चन सैनिकः नवयुवा, अस्मासु पश्यत्सु एव गर्तात् उत्प्लुत्य बहिरागतः । अनुक्षणमेव सेनानायकस्य निकटं धावितुमारब्धवान्, शरनिर्मुक्त इव नाराचः ।

कुमारी - हन्त, शूरः स एव । (वदने अङ्गुलीं निधत्ते)

नायकः - तत्र गत्वा गर्ते पतितं नायकं स्वस्कन्धोपरि आरोप्य पुनः अस्माकं गर्तसमीपमागन्तुमारेभे । किंचित् दूरमागतवान् अपि...

कुमारी - तदा...

नायकः - तदा बृहदेकं स्फोटकास्त्रं तत्रैवाऽपतत् यथा लक्ष्ये । महता शब्देन तदस्त्रं तत्रैव स्फुटितम् । उभयोः जीवितमन्त्यमगात् ।

कुमारी - (विषादं रूपयित्वा) अहो अत्याहितम्, अत्याहितम् ।

नायकः - द्वयोरपि अङ्गप्रत्यङ्गानि छिद्राणि दिशि दिशि विकीर्णानि । यदा युद्धस्य तीव्रता किञ्चिदिव न्यूनाजाता, तदा गत्वा पश्यामः... पादः एकत्र, शिरः अन्यत्र, करः अपरत्र ।

कुमारी - (अनुकम्पां यथोचितां सूचयति ।)

नायकः - एकस्मिन् हस्ते बाहुपट्टिकाऽसीत् । पट्टिकायां योधदलस्य नाम, सैनिकस्य संख्या, तस्य नाम इत्यादि सर्वमासीत् । नाम...नाम श्यामकुमार् चिन्नूर् इत्यासीत् ।

कुमारी - (आकस्मिकतया पतितम् आघातमसहमाना) अहो मे भ्राता श्यामः श्यामकुमार्... (विलपन्ती मुखमाच्छाद्य रोदिति) ।

नायकः - (स्वल्पकालं मौनमास्थाय, तदनन्तरं मृदुना स्वरेण) भद्रे, सहोदरस्य मरणं नाम सोढुं दुःशकम् । तज्जानामि । तथापि एतद्वक्तव्यम् आसीन्मया । गत्यन्तरं नासीत् । महत्तरा ते वेदना प्राप्ता मत्तः । अनेन दुःखितं मे मनः ।

कुमारी - (सगद्गदं) हन्त, भवान् किं कर्तुं शक्नोति । तस्य ललाटलिखितं तथासीत् । अस्माकमेवम् ।

नायकः - परं सुवर्णाक्षरैः लेखनीयं तत् ।

कुमारी - किं किमुक्तं भवता । भिन्नं छिन्नं च शरीरम् अनाथं च पतितं यत् तत् सुवर्णाक्षरैः ?

नायकः - भद्रे, शृणु, तव सहोदरः यूरोपदेशस्य रणभूमौ महच्छौर्यं प्रदर्शयन् शताधिकेषु पश्यत्सु वीराधिवीर इव प्राणानत्यजदिति वृत्तं तन्मातरं वद । वीरमाता सा ।

कुमारी - हे देव, कीदृश भयङ्कर मरणं दत्तवानसि मे सहोदराय। (पुनः रोदिति। कथंचित् आत्मानं समाश्वास्य) आर्य, भवद्वारा भ्रातुः वृत्तान्तो ज्ञातः। इतः परं तद्विषये चिन्तनीयं किमपि नास्ति। सर्वं समाप्तम्। सः निर्गतः अपुनर्दर्शनाय।

नायकः - जीवतामपमानकरं मरणं न तेन प्राप्तं किल।

कुमारी - आर्य सत्यम्। प्रायः अस्माकं कृते अवशिष्टं समाश्वासनं तदेव।

नायकः - भद्रे, योधपुङ्गवस्य माता, इत्यभिधानप्राप्तिः सुलभसाध्या वा ?

कुमारी - सत्यं सत्यम्। परं केनापि मनोरथेनात्रागत्य ईदृशो उदन्तः श्रुतो मया। अहो रोदितुमपि न शक्नोमि। तावच्छोचनीया परिस्थितिः मम। (अञ्चलेन अश्रु प्रमार्ज्य, उत्त्थाय) आर्य, अवसितं किल मम कार्यम्। इदानीं गृहोन्मुखं मे मनः। अम्बा मामेव प्रतीक्षमाणा निराहारा तिष्ठति।

नायकः - जानामि, ज़ानामि, तस्याः अवस्थाम्। शीघ्रमेव इतो गन्तव्यं त्वया।

कुमारी - तर्हि अहं साधयितुमिच्छामि । (नमस्करोति)

नायकः - (प्रतिवन्दनं कृत्वा तामेव पश्यन्) भवतु, गच्छ । (कुमारी परिक्रामति । तदन्तरे) भद्रे, मुहूर्तं प्रतिपालय अन्यदप्यस्ति ।

कुमारी - (प्रतिनिवर्त्य) अन्यत् किम् ?

नायकः - अस्मिन् लोके मदीयमिति अवशिष्टं किंचिदस्ति । मया सह परलोकं नागच्छति तत् । अतः तव कृते दातव्यमिति निश्चितम् । तत्स्वीकृत्य अम्बायाः पादयोः समर्प्यताम् ।

कुमारी - (सम्भ्रान्ता) किमेतत् ?

नायकः - (धनकोशस्य मुखं मुद्रयित्वा) इदमेव । मत्परतः अम्बायाः कृते यच्छसि किल ।

कुमारी - अन्तः किमस्तीति द्रष्टुमिछामि । (कोशं भेत्तुं प्रयतते)

नायकः - न न, कृपया मास्तु । नोद्घाटय ।

कुमारी - (सविस्मयम्) किमर्थम् ?

नायकः - तत्परीक्षास्थानमिदं न । मातृदेवो भव । सा मम माता न भवेत् । तथापि वीरमाता सर्वैः वन्दनीया । तस्याः पदतले एतदर्पय ।

कुमारी - अस्तु, आर्य यथा भवानिच्छति ।

नायकः - परमसन्तुष्टः अहम् । परमसन्तुष्टः । बहवो धन्यवादाः ।

कुमारी - कथं मदर्थे धन्यवादान् वदति आर्यः ?

नायकः - कथं न वदामि ? अस्मिन् जगतीतले मदीयमिति अवशिष्टमिदमेव । तन्मातुः कृते, तव मातुः कृते अर्पयितुमवकाशः प्राप्तः किल । तृप्तोऽहम् । सर्वथा पापी नाहम् । पापी नाहम् ।

कुमारी - आर्य, वयमपि भवदुपकारं न विस्मरामः । भ्रातृचिन्ताकुलान् अस्मान् इदमित्थमिति तथ्यमुक्त्वा चिन्तां दूरीकृतवान् । वयं बहूपकृताः ।

नायकः - मुहूर्तेऽस्मिन् अहमपि परमनिश्चिन्तो जातः । तथापि खिन्नमिव मे मनः ।

कुमारी - किमर्थम् ?

नायकः - त्वमितः प्रतिनिवर्तसे किल, अतः ।

कुमारी - आर्य, यदि भवानिच्छति इतोऽपि कञ्चित् कालं तिष्ठेयम् । परं किं तेन । गन्तव्यमेव ।

तथापि मम इतोगमनात्पूर्वं किमपि यत् भवतः सन्तोषदायकं वा शान्तिदायकं वा अस्ति चेत् तत्कर्तुमहमिच्छामि ।

नायकः - (आशापूर्णमुखः) अस्ति...

कुमारी - तद्वदतु आर्यः ।

नायकः - (सङ्कोचमनुभवन्) अन्यत्किमपि न, अहं...

कुमारी - वदतु आर्य, निस्सङ्कोचं वदतु ।

नायकः - (अन्यतो मुखं परिवृत्य) न किञ्चित् न किञ्चित् ।

कुमारी - वक्तव्यमेव । अन्यथा नाहं इतो गमिष्यामि । किमपेक्षितं मत्तः ?

नायकः - (सातङ्कं) वदामि । शृणु, - अस्य कारागारास्य निष्प्रकाशे निर्वाते बिले न एकं, न द्वौ न वा त्रीन् किन्तु चतुरः दीर्घ दीर्घ मासान् यावत् मृगसदृशः स्थित्वा भृशम् उद्विग्नोऽस्मि । (कुमारी अश्रुकलुषितमुखी तमेव सकरुणं निध्यायति) यदि अन्यथा न मन्यसे, मामपि पापकर्माणं भ्रातरमिति मत्वा एकवारं केवलमेकवारं 'सहोदर' इति आह्वयसि चेत्

मम दारुणं दुःखं विनोदयितुं शक्नोमि। मम जीवितयात्रायाः शिष्टमल्पकालं परमसौख्येन यापयामि। एषैव मम प्रार्थना।

कुमारी - (भावपरवशा रुदती शनैः शनैः तमुपसृत्य 'सहोदर' इति वदन्ती बाहू प्रसारयति। वात्सल्यातिशयेन तां परिष्वज्य नायकः 'भगिनी' 'भगिनी'ति पुनः पुनः वदन् आनन्दातिरेकमनुभवति। कुमारी मुक्तमनाः रोदिति। पादयोः पतति।)

नायकः - (तामुत्थापयन्) भद्रे, चिरं जीव। सुमङ्गली सुपुत्रवती च भव।

कुमारी - (कथञ्चित् आत्मानं पर्यवस्थापयन्ती, उत्थाय) सहोदर, गच्छामि वा ?

नायकः - (निश्वस्य) अस्तु सौम्ये, प्रतिष्ठस्व। शिवास्ते सन्तु पन्थानः।

कुमारी - सहोदर, नमस्ते। (पुनः प्रतिनिवृत्य) सहोदर...

नायकः - (सकौतुकं) वद भद्रे, वद।

कुमारी - यत्किञ्चित् स्मृतं तावदेव । मम भ्राता वदति स्म किल तत् गीतं स्मृतवती । मां निद्रापयितुं प्रतिदिनं गायति स्म सः ।

नायकः - पुनरपि श्रोतुं कुतूहली अहम् ।

कुमारी - (गद्गदेन कण्ठेन)
एहि एहि चन्दिर तापहरणमन्दिर
विमलकान्तिसुन्दर शीतकिरणसागर
(पूर्णं वक्तुमशक्ता दुःखातिशयेन निष्क्रान्ता)

नायकः - (तन्निर्गमनदिशामेव पश्यन्...क्रमेण)
एहि एहि चन्दिर तापहरण मन्दिर
ते मरीचिमर्शनम् चित्तशान्तिसाधनम्
तव तु सौम्यदर्शनम् सकलखेदनाशनम् ।
भगिनि, मत्प्रियभगिनि, श्यामले, तवोपरि बाल्ये वृष्टा वात्सल्यधारा सार्थकतामयासीत् । तव च प्रत्यक्षदर्शनम् अम्बायाश्च परोक्षसान्निध्यं मज्जीवितस्य परमानन्दकारकः क्षणः । (क्रमेण उद्विग्नतां न्यूनीकृत्य प्रकृतिमापद्य स्थिरभावेन) अपनीतभारस्येव उच्छ्वसितं मे मनः ।
(एतदन्तरे, मुकुन्दरायः प्रविशति, पृष्ठतः धर्मोपदेशकः अनुसरति)

मुकुन्दः नायक,

उपदेशकः - वत्स, अमर...

नायक - सज्जोऽहम् अन्तिमयात्रायै । (रामसिंग् मध्ये स्थितं द्वारमुद्घाटच पार्श्वे तिष्ठति । मुकुन्दरायः अमरनायकः धर्मोपदेशकश्च क्रमेण तत्र प्रविशन्ति ।)

(अन्ते, द्वारे अमरनायकस्य मृतदेहः रज्जुमाश्रित्य लम्बते । छाया-दृश्यरूपेणाऽपि एतद्योजयितुं शक्यते ।)

समाप्तमिदं अमरनायकं नाम एकाङ्कम्

* * *

# GĀNDHISMARAṆA SAMBHRAMAM

SANSKRIT ADAPTATION

Of

# REMEMBER CAESAR

by

GORDON DAVIOT

# GĀNDHISMARAṆA SAMBHRAMAM

The play was first enacted on 25.12.1989, at the Sanskrit Drama Competition organised by the RVISS, with the following troupe on behalf of NMKRV College for Women, Jayanagar, Bangalore.

| | | |
|---|---|---|
| **Jagannathagupta** | - | **Kum. Ashakaveri, III B.Com,** |
| **Anasuyadevi** | - | **Kum. Padmaja D.S. III.B.Sc.** |
| **Narayana** | - | **Kum. Sangeetha P. III B.Com.** |
| **Music** | - | **Kum. Vani, III B.Sc.**<br>**and**<br>**Sri. Nagaraj** |
| **Lighting** | - | **Sri Mahabaleswara Bhatt**<br>**Lecturer in Commerce, NMKRV College for Women** |
| **Technical Supervision** | - | **K. Gopinath** |
| **Stage Material** | - | **Prabhat Kalavidaru** |

**Stage and Direction**

**S.R. LEELA**

# गान्धिस्मरणसंभ्रमम्

## पात्राणि

न्यायाधीशः - जगन्नाथगुप्तः
गुप्तमहोदयस्य कार्यदर्शी - नारायणः
न्यायाधीशस्य पत्नी - अनसूयादेवी ।

देशः - गुप्तमहोदयस्य गृहम्
कालः - प्रातःकालः

[सद्य एव श्रेष्ठन्यायालयस्य न्यायपालत्वेन नियुक्तः जगन्नाथगुप्तः महान् धनिकः न । तस्य गृहस्य प्रथमाट्टे स्थितः एकःबृहत् प्रकोष्ठः अध्ययनार्थं विश्रान्तिनिमित्तं च उपयुज्यते । प्रकोष्ठस्य पृष्ठतः स्थितेन विशालेन वातायनेन गृहस्य प्रवेशद्वारं द्रष्टुं शक्यते । प्रकोष्ठस्य वामतः अन्यदेकं वातायनं गृहारामस्य वृक्षसमूहान् दर्शयति । वातायनसमीपे भित्तिपेटिका अस्ति । भित्तिषु तत्र तत्र पूर्वजानां गुरूणां च भावचित्राणि दृश्यन्ते ।

जगन्नाथगुप्तः स्वस्थाने उपविष्टः अस्ति; तस्य पुरतः स्थितायां उत्पीठिकायां पुस्तकानि पत्राणि इत्यादयः सामग्र्यः सन्ति । गुप्तमहोदयस्य वामतः नारायणः स्वोत्पीठिकायाः

पुरतः उपविशति । सः पेशलशरीरः प्रामाणिकः विस्मरणशीलश्च । कस्यापि पत्रस्य प्रतिलिपीकरणे व्यग्रः । जगन्नाथगुप्तः नस्यमाघ्रातुं सर्वविधव्यवस्थां कुर्वन् अस्ति । नारायणस्तु स्वस्वामिनः दीर्घदीर्घोपन्यासं शृण्वन्नेव कार्येऽपि मनः दातुमभ्यस्तवानू । यदा गुप्तमहोदयस्य वाक्स्रोतः तस्य श्रवणपथमायाति तदा पत्रे स्थितं पदमेकैकमपि उच्चारयन् प्रतिलिपीकरणे निरतः तिष्ठति ।]

जगन्नाथगुप्तः - नारायण, एष न केवलं स्वधर्मस्य प्रश्नः । (नस्यमाघ्रातुं किञ्चिदिव वाचं स्थगयति) त्वयापि जीवने अभ्युदयो द्रष्टव्यः । अखिलं जीवनम् अन्यस्य कार्यदर्शी भूत्वैव यापयितुं नेच्छसीति मन्ये । कार्यदक्षता, धैर्यम्, अल्पांशेष्वपि गौरवबुद्धिश्च अपेक्षिता । पश्य, अहं यस्य कस्यापि कृपाकटाक्षेण श्रेष्ठन्यायालयस्य न्यायाधीशः नाभवम् । श्रेष्ठस्थानमेतत् महता प्रयत्नेन स्वकीयेन च श्रमेण संपादितम् । हुम्, मम सहोद्योगिनः केचन इदानीमपि अकिञ्चित्करं कार्यं कुर्वन्तः जीविकां निर्वहन्ति । अस्तु, तेन किमिदानीम्? निष्पक्षपाती न्यायपालः इति अहं सर्वत्र सुप्रसिद्धः जनादरणीयश्च । नारायण,

त्वया तदा तदा दिनार्धविरामः किमर्थमपेक्ष्यते ? (लेखने निमग्नं तं दृष्ट्वा, कठोरस्वनेन) नारायण, श्रुतो वा मद्वचनम्?

नारायणः - (स्थगितया वाग्धारया सहसा प्रतिबुध्य) किमुक्तं.....आ न.......शृण्वन्नस्मि श्रीमन् । सर्वं श्रुतम् ।

जगन्नाथः - तर्हि किमुक्तं, वद ।

नारायणः - यथापूर्वं स्वविषय एव । (जिह्वां दशन्) तदेव नाम यत् तत्रभवान् श्रेष्ठन्यायालयस्य श्रेष्ठस्थानं कथमारूढवान् इत्यादिकं ...(एतद्बहुवारं श्रुतमिति स्पष्टीकरोति) ।

जगन्नाथः - हुं - वयं तव दिनार्धविरामस्य विचारं कथयन्तः आस्म । केवलं गतमासे तृतीयदिनाङ्के मध्याह्नानन्तरं विरामं गृहीत्वा, 'मम पितरौ ग्रामादागतौ । तयोः नगरं दर्शयितव्यम्' इत्युक्त्वा, अटितुं गतवान् । अद्य पुनः 'मध्याह्ने नागच्छामी'ति वदसि । तत्किमर्थमिति पृच्छामो यदि तर्हि तव वैयक्तिकविषये वयं परमकुतूहलिनः इति न भावयसि किल ?

नारायणः - श्रीमन्, मया चिन्तितं यत् यदि अद्य मध्याह्ने अत्र ममापेक्षा नास्ति तर्हि आयोगस्य कार्यालयं गत्वा तमुट्टङ्ककं दृष्ट्वा 'पत्रप्रेषणे किमर्थं विलम्बः' इति पृच्छामीति ।

जगन्नाथः - (सन्तुष्टः) ओ एवं वा . . . .?

नारायणः - तत् पत्रं विना अत्र अग्रे गन्तुं कष्टं भवति अस्मिन् परमासक्तिपूर्णे क्षणे....(साभिलाषः पत्रं पश्यति)

जगन्नाथः - सत्यम् । (उत्थाय, पुनः नस्याघ्राणे रतः सन्) तमुट्टङ्ककं द्रष्टुं शोभनं मुहूर्तमद्यैव । यतः आतपोऽपि नोग्रः । हुं....वस्तुतः इदानीमेव किञ्चिदिव समाश्वस्ताः वयं, यतः त्वमीदृशेषु कार्येषु मनो ददासीति । वर्धिष्णोः तरुणस्य युक्तमेतत् यत् कार्यशीलता, धैर्यम्, अल्पांशेष्वपि गौरवदृष्टिश्चेति ....त्रयं....कुत्र मम नस्यकरण्डम्, एतत् त्रयं....यः अनुसरति तं वृणते गुणलुब्धाः स्वयमेव संपदः । कुत्र मम करवस्त्रम्? (सर्वेषु कोशेषु अन्विष्यन्) अनुशासनं विना न कोऽपि उच्चस्थानं प्राप्नोति । (नारायणः पुनः स्वकार्ये मग्नः तिष्ठति । गुप्तः. एकस्मात् कोशात् पिण्डीभूतं पत्रमेकं

गृहीत्वा विस्तारयति अप्रयासेनैव) नारायण, कार्यदक्षता... सैव मनुष्यम् औन्नत्यं प्रापयति । (विस्तृतपत्रे लिखितान्यक्षराणि वाचयति 'गान्धिं स्मर' पुनः पुनः तदेव पठन् पत्रं परिवर्त्य पश्यति । किमपि स्फुरति । गृहीतभयङ्कराभिप्रायः) नारायण, अद्य का तिथिः ? (सः नोत्तरयति) नारायण, अद्य को दिनाङ्कः ?

नारायणः - (प्रतिबुध्य संभ्रान्तः) अद्य दिनाङ्कः त्रिंशत् भवेत् श्रीमन् ।

जगन्नाथः - भवेत् किम् ? तदेव । (पत्रं पश्यन् भयग्रस्तेन नीचस्वरेण-horrified whisper) 'गान्धिं स्मर' (प्रकाशं) अद्य मां मारयितुमिच्छन्ति । (चकितः नारायणः समीपमागत्य तमेव पश्यति ।) न्यायाधीशस्य दुरवस्था नाम इयमेव । न्यायाधीशः यदा निष्पक्षपाती निर्भीतश्च भवति (चकितस्य नारायणस्य मुखं पत्रेण वीजयति) तदा तस्मिन् द्वेषोऽपि वर्धते ।

नारायणः - (किमपि अजानन्) किमभवत् श्रीमन्, किमभवत् ?

जगन्नाथः - मम मृत्युसूचना । यद्यहं जागरूको न भवामि तर्हि मृत्युमुखे पतिष्यामि । (परिक्रामन्) एषु दिनेषु कः कः व्यवहारः आसीत्? सः मद्यपानव्यवहारः.... तत्राहं उत्कोचं तिरस्कृतवान् । अनन्तरं CBI व्यवहारः आसीत् । तत्र मया दत्तस्य निर्णयस्य विचारे सर्वोऽप्यसन्तुष्टः ।

नारायणः - किन्तु श्रीमन्, पत्रे बिभीषिका अस्ति वा? कथं पत्रमुपलब्धम्?

जगन्नाथः - मम कोशे आसीत् । येन केनापि....आँ इदानीं स्मृतम् । ह्यः यदाहं न्यायालयान्निर्गतस्तदा कोऽपि मां संघट्टयन्निव गतवान् । कृशः आसीत् । किन्तु खलः, धूर्तः......

नारायणः - पत्रे किमस्ति?

जगन्नाथः - (नारायणस्य कुतूहलनिवर्तनापेक्षयाऽपि स्वप्राणपरिरक्षणे अधिकमभिनिविष्टः सन्) हाँ, द्वारे एव । क्षमामपि न याचितान् । तथापि तेन पूर्वसूचना दत्तेति वन्दनीयः सः धूर्तः । किं करोमि प्रायः अकालमरणमेव मम ललाटे लिखितं स्यात् । किन्तु यद्यहं प्रयतिष्ये योजनामेनां विपरिवर्तयितुमपि शक्नोमि ।

अस्तु । (किमपि निश्चित्य) नारायण, गच्छ, गत्वा सर्वाणि द्वाराणि पिधाय कीलय । मम पत्नीं तावदाह्वय । अनुक्षणमेव । 'अनुक्षणम् आगन्तव्यमि'ति स्फुटं वद । अन्यथा विलम्बशीला सा अद्य नागच्छेत् । (नारायणः त्वरया गच्छति) पश्य, गृहे कोऽपि अपरिचितः अस्ति किम् ?

नारायणः - सः सुधाकारः अस्ति । नूतनवर्णयोजनार्थं वातायनं स्वच्छीकुर्वन्नस्ति (सः बहिरस्तीति शिरसा दर्शयति ।)

जगन्नाथः - तमनुक्षणमेव बहिर्निष्कासय । सर्वं त्यक्त्वा इदानीमेव गन्तव्यमिति वद । तस्य गमनसम-नन्तरमेव द्वारं कीलय । वातायनानि..... तान्यपि पिधेहि । [नारायणः त्वरया निष्क्रान्तः । सुधाकारं प्रति तेन दीयमान आदेशोऽपि श्रोतुं शक्यते । 'रे सुधाकार, श्रीमन् वदति त्वम्' ....इत्यादि । गुप्तमहोदयः एतत् श्रुत्वा तात्कालिकसमाश्वासनं लब्ध्वा परितः पश्यति । भित्तिपेटिकायाः उपरि दृष्टिः केन्द्रीकृता भवति । व्याकुलः सन् भीत भीत एव drawer तः गोलकायुधं गृह्णाति ।

भित्तिपेटिकायाः समीपं स्थित्वा) रे धातुक, आयुधं तत्र त्यक्त्वा बहिरागच्छ । (निश्शब्दं) आयुधं त्यक्त्वा बहिरागच्छ रे । अन्यथा त्वां भस्मीकरोमि । ( निश्शब्दं) पार्श्वे स्थित्वा भित्तिपेटिकायाः द्वारं शनैः उद्घाटयति । तत्र किमपि अपश्यन् लज्जितो भूत्वा गोलकायुधं यथास्थानं प्रापयति) ।

(ततः प्रविशति अनसूया । सा हसन्मुखी, कार्यशीला च । सद्गृहिणीति दर्शनमात्रेणैव ज्ञायते । तस्याः ऋजुतायाः पृष्ठतः कियती बुद्धिशक्तिर्वा निरपायकरं कौटिल्यं वा (Sweet malice) अस्तीति तर्कयितुं न शक्यते । पृष्ठतः पश्यन्ती वदति ।)

अनसूया - सः सुधाकारः जलद्रोणीं तत्र तत्रैव त्यक्त्वा गच्छन्नस्ति । कोऽयं प्रातःकाले कोलाहलः ?

जगन्नाथः - (उपसृत्य) तस्याः हस्तं हस्तेन गृहीत्वा समाश्वासयन्निव) प्रिये! उद्विग्नता मास्तु......

अनसूया - नाहमुद्विग्ना । किन्तु अनेन 'उद्विग्नता मास्तु' इति वाक्येन उद्विग्नां मां कारयति भवान् ।

जगन्नाथः - प्रिये! भवत्याः प्रियपतेः प्राणाः विपदि-निमग्नाः ।

अनसूया - हुम् । तदा तदा मम आर्यपुत्रस्य प्राणाः विपदिनिमग्ना भवन्ति ननु ।

जगन्नाथः - (तस्याः लघुभावं सर्वथा अनङ्गीकुर्वन्) अनसूये, संहारः !

अनसूया - तर्हि समीचीनमेवाभवत् । भवान् आत्मानं महान्तं मन्यते । महतां संहारः कीर्तिवर्धनः। इच्छा पूर्णा किल ?

जगन्नाथः - किं वक्तुकामा भवती ? किं तवाऽकूतम् ?

अनसूया - ममाभिप्रायः एवम् - साधारणाः पुरुषाः न संह्रियन्ते । संहारयोग्यो भवान् महान् संजातः इत्येव ।

जगन्नाथः - (पत्रं दर्शयन्) पत्रं पठित्वा अनन्तरं वद एवं परिहासार्हो वा अयं विषय इति ।

अनसूया - आर्यपुत्र, न खलु परिहासः । (पठन्ती) अविहा, तावत् सुन्दरं लिखितम् एतस्य पठनाय महान् परिश्रमः अनुष्ठेयः । यतः एतत् .....

जगन्नाथः - अज्ञस्य धूर्तस्य लिपिः कथमन्यथा भवेत् ।

अनसूया - (कष्टेन वाचयित्वा) 'गान्धिं स्मर', किमेषा प्रहेलिका ?

जगन्नाथः - प्रहेलिका ? मृत्युघोषणा । अद्य कः वासरः ?

अनसूया - गुरुवासरः ।

जगन्नाथः - दिनाङ्कः ?

अनसूया - नवविंशतितमः भवेत् ।

जगन्नाथः - नवविंशतितमः न, त्रिंशत्तमः ।

अनसूया - दिष्ट्या स्मृतम् । भवतः भगिन्याः जन्मदिनोत्सवः अद्य । तस्याः कृते पुष्पादिकमुपायनं प्रेषणीयम् ।

जगन्नाथ - अनसूये, कियता लाघवेन वदसि । अद्य गान्धिमहाभागः संहृतः इति कथं न स्मरसि ?

अनसूया - (दयार्द्रा) अस्तु नाम, स्मृतम् तस्य अत्यहिंसा प्रवृत्तिरेव तं मृत्युमुखं प्रापयदिति प्रायोवादः ।

जगन्नाथः - किं तु सः महापुरुषः आसीत् । महात्मा ।

अनसूया - आम् आर्यपुत्र, (पत्रं पुनः दृष्ट्वा) भवन्तमपि संहर्तुं प्रयत्नः प्रचलति किम् ?

जगन्नाथः - अथकिम् ?

अनसूया - इतः पूर्वमेव न कृतमित्येव आश्चर्यम् । कुत इति चेत् सामान्यतः जनाः न्यायपालेभ्यः असूयन्ति । तत्रापि भवान् न्यायवितरणे बहु निष्ठुरः किल ।

जगन्नाथः - निष्ठुरः अहं न । न्यायदृष्टिरेव निष्ठुरा इव भाति । अनसूये, अहं न्यायपालः, न तु न्यायविडम्बकः । प्राकृतजनमनःप्रीत्यै न्याय-मार्गो न कदापि मया उल्लङ्घितः । तेषाम् इच्छानुसारमद्य मृत्युमुखं प्रविश्य तान् प्रीणयितुमपि नेच्छामि ।

अनसूया - तर्हि भवानद्य बहिर्न गच्छति किल । सम्यक् भुक्त्वा ताम्बूलचर्वणं कृत्वा विश्रान्तिमनुभवतु ।

जगन्नाथः - सर्वाणि द्वाराणि पिधातुं नारायणमहमुक्तवान् । अधोऽपि सर्वस्य पिधानमुचितमिति चिन्तयामि । अन्यथा...

अनसूया - सर्वविधदुरवस्थाम् अद्यैव उत्प्रेक्षते वा भवान् ? । अद्यैव सः शाकविक्रेता प्रत्यग्रशाकानि स्वकीयोद्यानादानेष्यामीत्युक्तवानासीत् ।

जगन्नाथः - प्रिये अनसूये, प्रियपतेः प्राणापेक्षयापि प्रत्यग्रशाकानि तव प्रियतराणि किम् ?

अनसूया - तथा न । किन्तु, विना शाकानि भोजनमेव न रोचते भवते । द्विविधं शाकव्यञ्जनं नास्ति चेत् भोजनार्थं नाह्वयतु इति आदेशो दत्तो भवतैव । (पत्रं प्रत्यर्पयन्ती) अस्तु पत्रमेतत् भवदर्थमेव इति कथं निश्चितम् ?

जगन्नाथः - यतः मम कोशे लब्धमतः । यदा नस्यार्थं पश्यामि तदा एतत् प्राप्तम् ।

अनसूया - एषु दिनेषु नस्यस्य कोलाहलः अधिकः संजातः ।

जगन्नाथः - पूर्वेद्युः येन केनचित् खलेन एतन्मम कोशे निगूहितम् ।

अनसूया - स महान् खलो नेति प्रतिभाति ।

जगन्नाथः - तत्कथं जानासि ?

अनसूया - पश्यतु, कोशे पत्रस्य न्यासो नाम किञ्चित् विशेषज्ञापनार्थम् । यदि भवान् पत्रमेतं न अद्रक्ष्यत् तदा यथापूर्वं बहिरगमिष्यत् । तदा तस्य हतकस्य गोलकास्त्रेण....

जगन्नाथः - अनसूये, अलम्,... उद्वेजयसि माम् । (उद्विग्नः नारायणः गृहप्रदक्षिणानन्तरं प्रविशति) नारायण, सर्वं सम्यक् परीक्षितं ननु । अखिलानि द्वाराणि अशेषाणि वातायनानि पिहितानि ? सर्वे कर्मकराः निष्कासिताः ?

नारायणः - (भयेन) सर्वाणि, विना पाकशालायाः, श्रीमन् ।

जगन्नाथः - (कोपेन) पाकशालाद्वारं किमर्थं न ?

नारायणः - (प्रलपन्) पाचिका अभिप्रैति यत् सा...

जगन्नाथः - वद, मम आज्ञापालनकर्मणि सा कथमुदास्ते ?

नारायणः - (वेगेन) सा वदति यत् 'अहं विश्वसनीया । इतः पूर्वं यदा कदापि श्रीकृष्णजन्मस्थानं न दृष्टम् । इतः परमपि तद्दर्शने कुतूहलं नास्ति । पाकशालान्तः प्रविष्टं यं कमपि प्रतिरोद्धुमहं समर्था' इति ।

अनसूया - चिन्ता नास्ति । अहमेव तां वदामि (जिगमिषति) ।

जगन्नाथः - (तां वारयन् क्रोधेन) उन्मत्तिका सा । यदि द्वाराणि उद्घाटितानि भवेयुः तर्हि तस्याः

स्वामी अहं तत्पुरस्तादेव व्यापाद्येय इत्युक्तं किम् ?

नारायणः - उक्तं श्रीमन् । (भीतिं नाटयित्वा) पुनः पुनः उक्तम् । सा बहु दुर्ललिता । अन्यच्च, वेल्लनी, दर्वी, छुरिका इत्यादयः अपि आसन् तत्रैव । अतः अधिकमहं नोक्तवान् ।

अनसूया - (सस्मितं) आर्यपुत्र, समाश्वसितु । प्रातःकाले पाचिकायाः चित्तवृत्तिः एवमेव भवति । तां समीकर्तुं चाटुवादमहं प्रयुञ्जे ।

जगन्नाथः - ओहो, कदारभ्य मम सेवकाः अपि चाटुवादमपेक्षन्ते । अस्मात् क्षणादेव सा मद्गृहात् बहिर्निस्सरतु ।

अनसूया - आर्यपुत्र, अलमनेन व्यर्थायासेन । सर्वेषामपि पाचकानां मनःस्थितिः विचित्रैव । सर्वदा ज्वलन्त्याः चुल्ल्याः पुरतः तिष्ठतां तेषां प्रवृत्तिः विलक्षणा भवति । तिष्ठतु, अहमेव गत्वा पश्यामि ।

जगन्नाथः - अनुक्षणमेव निस्सरतु नाम, सा । यदि गृहस्वामिनः प्राणपालनकर्मणि तस्याः तादृशी

अनास्था, तर्हि तस्य गृहे स्थातुमनर्हा सा । स्वकीयं जीर्णचीवरग्रन्थिं कक्षे निधाय बहिर्गच्छतु । नारायण, तदनु द्वारं सम्यक् पिधेहि ।

अनसूया - यदि सा निस्सरिष्यति भवतः प्रियाणि भक्ष्याणि कः पचति ? आर्यपुत्र, अलमनेन कीलोत्पाटन-कार्येण । पाकशाळाद्वारमपि कीलयामः । सर्वाणि वातायनानि अपि धट्टयामः। उपरितनवातायनद्वारा एव शाकविक्रयणं संपादयामि । यद्यपि व्यापारोऽयं प्रतिवेशिन्याः जरत्याः हास्यास्पदं भवेत् । (गच्छन्ती) गवाक्षमपि पिदध्मः वा ?

जगन्नाथः - (आत्मानं संस्तंभयन्) ईदृशे विपत्तिकाले तादृशी परिहासप्रवृत्तिः नोचिता अनर्हा च ।

अनसूया - कथं परिहासः ? यदि घातुकः तत्र स्वायुधं प्रवेशयति ? अत एव मयोक्तम् । (पुष्पभाजन-समीपं स्थापितं दीपद्वयं नयति)

जगन्नाथः - दीपौ किमर्थं नयसि ?

अनसूया - अधः सर्वाणि द्वाराणि पिहितानि ननु । अन्धकारे स्थातुमहं नेच्छामि अतः (निष्क्रान्ता)।

जगन्नाथः - अनावश्यकेषु अप्रमुखेषु च विषयेषु स्त्रीबुद्धिः कथं बहु तीक्ष्णगामिनी भवतीति आश्चर्यं मम। (अयत्नेनैव गवाक्षसमीपं गत्वा तस्य आयतत्वं परिशीलयति। तथैव तत्र स्थितं नारायणं दृष्ट्वा) नारायण, किं तूष्णीं तिष्ठसि? स्वकार्यमशून्यं कुरु।

नारायणः - क्षम्यताम्। भवद्रक्षणार्थं करणीयं यत् किंचित् अस्ति चेत्।

जगन्नाथः - (प्रशंसयानया बहुगर्वितः) धिक् त्वाम्। नारायण, मम किं भवेत्। अहं स्वस्थः तिष्ठामि। चिन्ता मा भूत्।

नारायणः - आरक्षकान् बोधयामि दूरवाणी द्वारा (दूरवाणी समीपं धावति)।

जगन्नाथः - (धैर्येण) न न...मास्तु मास्तु। यदि आरक्षाः अत्र तिष्ठन्ति तर्हि जनाः अन्यथा चिन्तयेयुः। मया उत्कोचो गृहीतः तदर्थं CBI raid इत्यादि अप्रियमेव भवेत्। जनानां जिह्वाचालनार्थं प्रोत्साहश्च लभ्येत। (एवं वदन् तत्रैव दक्षिणतः आसन्दस्योपरि स्थितां कामपि पोटलीं दृष्ट्वा) किमेतत्।

नारायणः - अद्य प्रातः भवदर्थमागतम् ।

जगन्नाथः - अन्तः किमस्ति ?

नारायणः - (सन्दिग्धः) न...न जानामि श्रीमन् । येन तदानीतं तेनोक्तं यत् अद्य भवतः कृते तस्यावश्यकता बहु अस्तीति ।

जगन्नाथः - अन्तः किमस्तीति न पृष्टं किम् ?

नारायणः - (विनयेन) तथा प्रश्नः नोचित इति कृत्वा न पृष्टम् । भवदर्थमानीतस्य वस्तुनः विचारे मम कौतूहलम् अस्थानं ननु । किन्तु श्रीमन्, यदा तदागतं तदा भवतेऽपि दर्शितम् । भवता उक्तं·तत्रैव स्थापयेति

जगन्नाथः - (तदेव सन्दिग्धया दृष्ट्या पश्यन्) एतदानीतवान् किल पुरुषः सः कीदृशः आसीत् । कृशः...कृष्णवर्णः आसीत् वा ?

नारायणः - (अजानन्)...स्यात् । कृशः इत्येव वक्तुं शक्यते । परन्तु तस्य वर्णं वक्तुं कष्टसाध्यम् । यतो लम्बमानेन उष्णीषेन मुखमावृतमासीत् । किन्तु...तस्य चिबुके कालकः आसीत् ।

जगन्नाथः - हा...तस्य धूर्तस्यापि चिबुके कालकः आसीदित्येव चिन्तयामि । अनुक्षणमेव एतन्निष्कासनीयम्।

नारायणः - इदं किमपि भयङ्करं स्फोटकं भवेत्? किं कुर्मः ?

जगन्नाथः - (पार्श्ववर्तिनंवातायनंनिर्दिश्य)एतद्वातायनमुद्घाटय । यावच्छक्यं तावद्दूरं क्षिपामि ।

नारायणः - किन्तु श्रीमन् क्षेपणेन कदाचित् स्फुटेत् ।

जगन्नाथः - अत्र स्थित्वापि न स्फुटेदिति को निश्चयः ? कदाप्रभृति अत्रास्ति इदम् ?

नारायणः - प्रातः सप्तवादनात् श्रीमन् ।

जगन्नाथः - प्रातः सप्तवादनात् ! अत्रागतस्य अस्य घण्टात्रयमतीतम् । नारायण, उद्घाटय वातायनम् ।

नारायणः - भवानेव वातायनमुद्घाटयतु । अहमेतस्य अन्तिमां गतिं प्रापयिष्यामि । मम जीवितं निस्सारम् । भवदीयं तु बहुमूल्यम् । राष्ट्रस्य प्रयोजनकरम् ।

जगन्नाथः - नारायण, न न....त्वं युवा । अहं वर्षीयान् । अस्मिन् लोके त्वया करणीयं बह्वस्ति । दीर्घायुष्मता त्वया स्थातव्यम् । यतः मम जीवितकथा त्वया लेखनीया प्रसारणीया च । अतः यथोक्तं तथाकुरु । (सः वातायनमुपसर्पति त्वरया)....तिष्ठ....तिष्ठ....ततोऽपि उत्तमः कल्पः । सुधाकारस्य द्रोणी तत्रैव अस्ति किल ?

नारायणः - आम् तत्रैव अस्ति । (गत्वा द्रोणीमानयति अनुक्षणमेव ।)

जगन्नाथः - दूरे तिष्ठ, (पोटलीं भयेनैव गृह्णाति) कीदृशं रौद्रमत्र अन्तर्गतमिति को जानाति । (भीत भीतः अधोमुखेन द्रोण्यामवतारयति पोटलीम-पाङ्गेन वीक्षमाणः) पर्याप्तं जलं नास्ति ।

नारायणः - आनयामि । शीघ्रमेवानयमि (प्रस्थितः)।

जगन्नाथः - न...न...गच्छ, तत्र पुष्पपात्रं...तस्मिन् जलं स्यात् पश्य ।

नारायणः - (सुन्दराणि पुष्पाणि पात्रादपनीय पात्रमानीय द्रोण्यामावर्जयति)...आम्, इदानीं पूर्णमभवत् ।

जगन्नाथः - पुनः उत्प्लवते । जले निमग्नं भवतु । अन्यथा प्रयोजनं नास्ति ।

नारायणः - कोऽपि भारः उपरि स्थापनीयः । तदा जले निमज्जति ।

जगन्नाथः - सुष्ठूक्तम् । किमपि आनय ।

नारायणः - किमानयामि ?

जगन्नाथः - नारायण, किमेवं मूर्ख इव जल्पसि । लेखनी त्यक्ता चेत् तव बुद्धिः शून्या भवति वा? यत्किमपि आनय । पुस्तकान्येव ।

नारायणः - (पुस्तकविषये गौरवबुद्धिं दर्शयन्) पुस्तकानि श्रीमन् । किन्तु जले पुस्तकानि...

जगन्नाथः - मूर्ख शिखामणे, प्राणापाये, पुस्तकाचिन्ता । संप्राप्ते सन्निहिते काले न हि न हि रक्षति डुकृञ्करणे । नारायण, बृहत्पुस्तकानि कानिचन आनय ।

(सुन्दराणि बहुमूल्यानि इति वदन् आनयति। अनन्तरमेकैकं पुस्तकं गुप्तमहोदयः द्रोण्यां जागरूकतया निदधाति यावत् अन्तः स्थितं जलं परिवहति ।)

**जगन्नाथः** - (सम्यक् उपविश्य आत्मानं समाश्वास्य) इदानीमेव तत् सुष्ठु निमग्नं जले । स्वेदकणान् ललाटदेशात् अपसारयति ।

(अनसूयादेवी प्रविशति भाजनहस्ता । भाजने उपाहारः काफी चास्ति)

**अनसूया** - आर्यपुत्र, किमिदं? द्रोण्यां किं निक्षिप्तम्?

**जगन्नाथः** - प्रातः आगता किल सा पोटली । यः इमामानीतवान् स एव मां पूर्वेद्युः संघट्टितवान् । पत्रं कोशे निगूहितवानपि । मूढाः ! एतं ग्रन्थिं भित्वा द्रक्ष्यामि तेषां कुटिलबन्धने पतिष्यामीति अचिन्तयन् खलु । (सन्तुष्टः) पश्य, ततोऽपि बुद्धिमत्तरोऽहम् । बुद्धिर्यस्य बलं तस्य ।

**अनसूया** - (सोद्वेगाश्चर्यं) केयं मूर्खता । तत् सुन्दरं नूतनं... सर्वं नष्टम् ।

**जगन्नाथः** - (कोपेन) अनसूये, सुन्दरः नूतनः कुथ एव मत्प्राणेभ्योऽपि गरीयान् किम्? पतिप्राणेभ्यो-ऽपि अयमेव तव प्रियतरः अभवत् ननु । संक्षोभयसि माम् ।

**अनसूया** - किं कुथः ? (किञ्चिदिव तूष्णीं स्थित्वा) कुथः इति केनोक्तम्? नेदं मम तात्पर्यम् । मम प्रियपतेः प्राणेभ्योऽपि गरीयः अस्मिन् जगतीतले किमपि नास्ति । अस्तु शान्तमनस्कः उपाहारं स्वीकृत्य काफीं पिबतु । वैद्यः सर्वदा वदति ईदृश उद्वेगः परिहर्तव्य इति । (पुष्पाणि पात्रे यथापूर्वं स्थापायितुं प्रयतते)

**जगन्नाथः** - वक्तुं सुकरं वैद्यस्य । यदि तस्य गृहे स्फोटकमभविष्यत्, तस्यैव जीवितं संशयग्रस्तम भविष्यत् तदा अज्ञास्यत् । (अनसूयादेवी वस्त्रेण कुथे निषिक्तं जलं अपनयति । तथैव कुतूहलेन द्रोण्याः अन्तः पश्यति)

**नारायणः** - (तस्याः मुखमेवावलोकयन्) अस्माभिः किञ्चिदिव यद्वा तद्वा कृतमस्ति । अहं तत् शोधयामि (अपराधीव तिष्ठति) ।

**अनसूया** - मनुः कौटिल्यः याज्ञवल्क्यः सर्वेऽपि अभिषेकार्थमत्र अवतीर्णा इव भान्ति ।

**नारायणः** - तत् प्लवते स्म । कालहरणं न सहते स्म । अतः येन केनापि प्रकारेण मज्जनीयमिति कृत्वा...पुस्तकं...

अनसूया - एवं वा । समीचीनम् । बहुसमीचीनम् । (सिक्तवस्त्रं पुष्पाणि च तस्य हस्ते दत्वा) कृपया एतत् सर्वं अधस्तात् उपहर । (पुष्पपात्रमपि तस्य हस्ते दत्वा) सेविका साहाय्येन पुनः संयोज्य आगच्छ । (निष्क्रान्तः नारायणः)

जगन्नाथः - पाकशालाधिष्ठिता महाराज्ञी स्वाधीनद्वाराणि अर्गलयितुं संकल्पितवती वा ?

अनसूया - (उपाहारभाजनं तत्पुरतः स्थापयन्ती) भृत्याः सर्वे अद्य सन्तुष्टाः । यथा वक्तव्यं तथा उक्तं चेत् सर्वे शृण्वन्ति एव । भर्तुः प्राणपरिरक्षणार्थं स्वप्राणानपि परित्यक्तुं सज्जा सा पाचिका । अन्यच्च, सा सेविका चन्द्रम्मा वदति स्म 'ग्राम एव वरम् । पत्तने जामिता' इति । सापि......

जगन्नाथः - किं वदति अधुना ।

अनसूया - 'पत्तनजीवनेऽपि अस्ति प्रमोद' इति....अद्य अस्मत् गृहस्य कोलाहलं दृष्ट्वा.....अस्तु, उपाहारः सम्यगस्ति किल ।

जगन्नाथः - सम्यगस्ति । भर्तुः प्राणोत्क्रमणसमये भृत्यानां संभ्रमः बहुसम्यगस्ति ।

अनसूया - तथा न चिन्तयतु कृपया । भृत्याः सामान्यतः किञ्चिदिव परिहासमिच्छन्ति तावदेव ।

जगन्नाथः - किञ्चिदिव परिहासः । मम चरमयात्रा प्रायः तेषां इतोऽपि प्रमोदमावहेत् ।

अनसूया - प्रतिहतममङ्गलम् । आर्यपुत्र, तथा न वक्तव्यम् । (वातायनस्य पुरतः भित्तौ चित्रं दर्शयन्ती) भवतः मातामहीम् इतः दूरे नयामो वा ?

जगन्नाथः - सा किं कृतवती ?

अनसूया - किमपि न । परंतु वातायनद्वारा प्रविशतां गोलकानां पथि निपतति सा ।

जगन्नाथः - वातायनद्वारा गोलकाः किमर्थमागच्छेयुरिति प्रष्टुमिच्छामि ।

अनसूया - (तस्य स्वरकार्कश्यं नानुमन्यमाना) आर्यपुत्र, भवतः मातामहीविषये मम आस्था अनेन दर्शिता भवति तावदेव । तत्र चम्पकवृक्षे स्थितः यः कोऽपि...

**जगन्नाथः** - (उत्थाय) अनसूये, कुतोऽयं चम्पकवृक्षस्य प्रस्तावः ।

**अनसूया** - तत एव गोलकास्त्रप्रहारं कर्तुं शक्यम् । इत्युक्ते, यः कोऽपि तत्रैव स्थित्वा सुकरमेतत् कार्यं कर्तुमर्हति । पश्यतु, वृक्षः पत्रपूर्णः । तत्र शाखासु समुपविष्टः न केनापि शक्यते द्रष्टुम् । परन्तु स तु ततो सर्वं द्रष्टुं शक्नोति ।

**जगन्नाथः** - तर्हि वातायनादपसर ।

**अनसूया** - किमुक्तम् ।

**जगन्नाथः** - वातायनादपसर इत्युक्तम् ।

**अनसूया** - (वातायनाभिमुखमेवोपसर्पन्ती) मां कोऽपि न प्रहरति ।

**जगन्नाथः** - (परिक्रम्य सोपानसमीपं स्थित्वा) नारायण, नारायण..

**नारायणः** - (दूरादेव) श्रीमन्....

**जगन्नाथः** - उद्यानपालकः गतो वा न वा?

नारायणः - सः पाकशालावातायनस्य समीपे उपविश्य भोजनं करोति ।

जगन्नाथः - तं चम्पकवृक्षस्याधः उपविशेति मद्वचनाद् आज्ञापय । यावदहं पुनरागन्तुमादिशामि तावत् तिष्ठतु । ज्ञातं किम् ?

नारायणः - चम्पकवृक्षो वा ? अस्तु श्रीमन् । (जगन्नाथ महोदयः प्रतिनिवृत्य स्वोत्पीठिकायाः drawer तः गोलकायुधं गृह्णाति ।)

अनसूया - आर्यपुत्र, अप्रमत्तो भवतु । अपायकरमायुधं तत् ।

जगन्नाथः - (गंभीरेण स्वरेण) अहमपि जानामि ।

अनसूया - (अनुनयेन) मम वचनं शृणोतु । तत् बहु पुरातनम् । समीचीनं नास्ति । विंशति वर्षेभ्यः पूर्वं नवोढायाः मम पुरतः भवत्प्रतापप्रदर्शनार्थं तत् स्पृष्टमासीत् भवता । लक्ष्यं भेत्तुमिदानीं भवता न शक्यते । 'गोलकायुधप्रयोगानभिज्ञः मम पितृव्यपुत्रः कश्चन तत् प्रयोक्तुमुद्युक्तः स्वप्राणानेव पर्यत्यजदि'ति भवता एव पूर्वमुक्तं ननु ।

जगन्नाथः - (सासूयम्) मदीयमिदमायुधं सम्यगेवास्ति । केवलं धूलिदूषितम् । (मुखमारुतेन गोलकायुधं स्वच्छीकरोति ।)

अनसूया - अस्तु । घातुकः निराशो भविता ।

जगन्नाथः - किम् ?

अनसूया - आत्मानं घातयितुं भवान् स्वयमेवोद्युक्तः । (नारायणः प्रविशति पुष्पपात्रेण सह)

जगन्नाथः - नारायण, उद्यानपालकः तत्र गतः किल ?

नारायणः - आम् श्रीमन् ।(पात्रं तत्स्थाने निवेश्य वातायन-समीपमुपसर्पन्) भवदीया आज्ञा पालिता ।

जगन्नाथः - (ससंभ्रमम्) अविहा अविहा ! वातायनसमीपं न गच्छ । (नारायणः विस्मितः परितः पश्यति) तत्र चम्पकवृक्षे कोऽपि समुपविष्टो भवेत् हताशः ।

नारायणः - किन्तु श्रीमन्, मां किमर्थं हनिष्यति ?

जगन्नाथः - को जानाति । धूर्तघातुकस्य मनः को विजानाति । अस्तु तेन उद्यानपालकेन सह भाषणसमये द्वारमुद्घाटितं किम् ?

नारायणः - न हि न हि । संधिद्वारा उक्तम् ।

जगन्नाथः - साधु साधु ।

नारायणः - अन्यच्च श्रीमन् । सा पाचिका वदति यत् सेना आकारयितव्या इति ।

अनसूया - अस्मद्गृहकोलाहलं प्रशमयितुं सेनैव समाकारणीयेति सुष्ठु अभिप्रैति सा ।

जगन्नाथः - (आयुधस्यान्तः गोलकं प्रवेश्य) इदानीं वृक्षे कः तिष्ठतीति द्रक्ष्यामः (मार्जारगत्या वातायनपार्श्वमुपसृत्य अपाङ्गेन बहिः पश्यन् गोलकं चालयितुं सज्जः तिष्ठति ।)

अनसूया - (कातरभावेन) आर्यपुत्र, तिष्ठतु तावत् । अकार्यं मा भवतु । (द्वारस्य घण्टानिनादः भवति । सर्वे सविस्मयमालोकयन्ति ।)

नारायणः - कोऽपि आगतः । (पृष्ठतः स्थितं वातायनमुपसृत्य द्वारे कः इति परीक्षितुमुद्बाहुः वामनोऽयं प्रयतते ।)

जगन्नाथः - नारायण, नोद्धाटय वातायनद्वारम् ।



नारायणः - अन्यथा कः इति द्रष्टुं न शक्यते श्रीमन् ।

जगन्नाथः - परन्तु तव दर्शनमात्रेण यः कोऽपि त्वयि गोलकं चालयेत् ।

अनसूया - अहो-आर्यपुत्र, स आगन्तुकः निष्पापो निरुपद्रवो अस्मत्परिचितः सुहृत् भवेत् ।
(पुनः घण्टा नदति ।)

नारायणः - यदि आसन्दस्योपरि तिष्ठामि....(आसन्दमेकमाकृष्य तदुपरि तिष्ठति । तथापि द्रष्टुमशक्तः भवति ।) इतोऽपि किञ्चिदुपरि तिष्ठामि चेत् द्रष्टुं शक्नोमि ।

अनसूया - पादपीठममुं योजय, नारायण ।
(तदपि योजयित्वा अनसूयादेवीसाहाय्येन उपरि तिष्ठति)

जगन्नाथः - क इति द्रष्टुं शक्यते वा ?

नारायणः - हाँ हाँ । (वातायनं किञ्चिदिव अपावृत्य ग्रीवाभङ्गमभिनीय दृष्ट्वा सहर्षम्) सर्वं समीचीनं श्रीमन् । (पुनः वातायने शिरः प्रवेश्य) आगच्छन्तु, आगच्छन्तु । (इति कमपि आह्वयति)

जगन्नाथः - कः सः ? मूढ, किमर्थमन्तः प्रवेशयसि तम् ?

नारायणः - श्रीमन्, चिन्ता मास्तु । गान्धिमहाभागः आगतः । अन्तः प्रेषयामि किम्?

जगन्नाथः - (आगन्तारं प्रत्यभिज्ञातुमशक्तः) को नाम गान्धिः ?

नारायणः - गान्धिमहाभागं न स्मरति किम्? तं भवान् गतगुरुवासरे राजाजिनगरे अपश्यत् । कमपि व्यवहार विषयं चर्चयितुमागमिष्यामीति उक्तवान् आसीत् । भवता तल्लिखित्वा कोशे स्थापितं च ।

जगन्नाथः - (तदेव मर्दितं पत्रं कोशादपनीय चित्रीयमाणः)हॉ सत्यं मयैव लिखितम् । अन्यथा विस्मृतं भवेदिति कृत्वा लिखितम् । (पुनः पठित्वा) इदं मम हस्ताक्षरं किम्? स्यात् । ममैव भवेत् ।

अनसूया - अज्ञस्य धूर्तस्य कस्यचन घातुकस्य विषलिपिरिति भवता उद्घोषितं ननु? अस्तु, नारायण, गत्वा गान्धिमहाभागमन्तः प्रवेशय । (निष्क्रान्तः नारायणः) आर्यपुत्र, आयुधं स्वस्थानमलङ्करोतु । अन्यथा अभ्यागतः भीतो भवेत् । (निःश्वस्य, परिक्रामन्ती द्रोणीगतपुस्त-

कानि अवलोक्य)शास्त्रकाराणाम् अभिषेकः समाप्तः इति मन्ये। तान् बहिरानयतु। द्रोणीं नेतुं कमपि प्रेषयामि।

जगन्नाथः - ओह्-गान्धिमहाभागः...

अनसूया - तादृशनामधेयं कथं विस्मृतं भवता? भवतु गच्छाम्यहम्। प्रायः अभ्यागतस्य कृते उपाहारप्रबन्धः कश्चन कल्पनीयः। (प्रतिष्ठते)

जगन्नाथः - अनसूये, मुहूर्तकं तिष्ठ। (सा परिवृत्य तिष्ठति) पोटल्याः अन्तः किमस्तीति चिन्तयसि?

अनसूया - (सप्रहासम्) तत्र भवदीयः नूतनो वस्त्रपरिकल्पः अस्ति। अद्य सायंकाले मित्रस्य षष्ट्यब्द समारोहनिमित्तं धर्तुं सौचिकेन सज्जीकृत्य आनीतः।

जगन्नाथः - किमर्थं पूर्वमेव तथा नोक्तम्?

अनसूया - मद्वचनस्य कः श्रोता? (निष्क्रान्ता)
(विषण्णे गुप्तमहोदये द्रोण्याः पुस्तकं उद्धरति सति यवनिकापतति।)

**समाप्तमिदं गान्धिस्मरणसंभ्रमं नाम एकाङ्कं प्रहसनम्**

# GLOSSARY

| | | |
|---|---|---|
| आसन्दः/आसन्दी | - | Chair |
| उत्पीठिका | - | Table |
| कालकः | - | Mole |
| कुथः | - | Carpet |
| गोलकम् | - | Bullet |
| गोलकायुधम् | - | Pistol |
| गोलकास्त्रम् | - | Gun |
| दीर्घपीठः | - | Bench |
| पोटली | - | Parcel |
| भित्तिपेटिका | - | Wardrobe |
| भित्तिघटी | - | Wallclock |
| वस्त्रपरिकल्पः | - | Suit |
| वेल्लनी | - | Chapati roller |

## Well-rendered Sanskrit play

*Directed by the same author*

**ŚĀKUNTALAM**

The ever-popular love-tale of Shakuntala-Dushyanta and the connected melodrama was delightfully presented by "Abhinaya Bharathi" a newly formed troupe on Saturday in connection with the three-day national conference on knowledge representation and inference in Sanskrit at Sri Sringeri Sankar Matha, Shankarapuram, sponsored by the Computer Society of India. The conference was held at the suggestion of Sri Paramananda Bharathi Thirtha Swami of Sringeri.

'Abhinaya Bharathi' was formally inaugurated Mr. G.V. Iyer, film director. Dr. S.R. Leela of NMKRV College directed the play. The stage layout and the use of space suggested functional elegance, even a kind of stark beauty. Being a Sanskrit play the physical patterns of the actions and the inflection in speech, all helped, to reinforce the meaning of the text. The play was alive because it was well done and the occasion of its performance was so intimate that nothing was lost or seemed banal as would have surely happended on a large proscenium stage.

The most spontaneous performance came from Venkatesha Deshpande as Kanva Muni, Manjunatha Bhat's Vidushaka (though at times a bit overdone) provided an enjoyable comic relief drawing applause every time for his mannerisms, expressions and clarity in dialogue delivery. Prabhakar (Sharangarava) was the best among the minor characters. While Pratibha impressed as Shakuntala, Radhakrishna as Dushanta showed promise. All the other actors impressed the audience with the near accuracy of their reflexes. The rendition of Sanskrit Slokas and songs was evocative and was done to the accompaniment of lively orchestra.



THE HINDU - Dec. 26th, 1986.

## *Superb direction*

Author

The R.V. Institute of Sanskrit Studies has been organising an annual Sanskrit drama competition for the past 12 years.

As part of this year's contest the Sanskrit Drama troupe, *ABHINAYA BHARATI*, led by Dr. S.R. Leela, staged *Amaranayakam*, based on *The Valiant* by Hallworthy Hall and Robert Middlemas.

A superbly-directed venture *Amaranayakam* tells the story of a man who is sentenced to death for murder. He refuses to reveal his identity or regret his deed. The play ends with his hanging.

Manjunatha Bhatta, a lecturer in Sanskrit at Vijaya College, gave a refined performance as Amaranayaka. His diction was clear and filled with emotion. P.S. Madhavi, who played as Shyamala Kumari, Amaranayaka's sister, was also very expressive. Prabhakar Sharma (Mukunda Rao), Sridhara Bhat (swamiji) and M. Narayana Prasad (Ram Singh) were up to the mark. B.C. Ramakrishna's violin refrain was soulful.

Director Leela's use of the language-simple and easy-and her imaginative handling of the subje[illegible] *Amaranayakam* a memorable experience.

THE TIMES OF INDIA –